# ॥ वामनस्तोत्रं ॥

**श्री अदितिरुवाच**

यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद
तीर्थश्रवः श्रवणमंगलनामधेय ।
आपन्नलोकवृजिनोपशमोदयाऽद्य
शं नः कृधीश भगवन्नसि दीननाथः ॥ १ ॥

विश्वाय विश्वभवनस्थितिसम्यमाय
स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने ।
स्वस्थाय शश्वदुपबृंहितपूर्णबोध
व्यापादितात्मतमसे हरये नमस्ते ॥ २ ॥

आयुः परं वपुरभीष्टमतुल्यलक्ष्मीः
द्योभूरसाः सकलयोगगुणास्त्रिवर्गः ।
ज्ञानं च केवलमनंत भवंति तुष्टात्
त्वत्तो नृणां किमु सपत्नजयादिराशीः ॥ ३ ॥

॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे सप्तदशोऽध्याये श्री अदितिकृत वामनस्तोत्रं संपूर्णं ॥